Vidwan Sri B. V. Ramapriya
Melkote.

# श्रीकाव्यकण्ठगणपतिमुनिप्रणीतं

# स्तोत्ररत्नत्रयम्

25



१९९१

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

श्रीकाव्यकण्ठगणपतिमुनिप्रणीतं

# स्तो त्र र त्न त्र य म्



१९९१

# आमुखम्

विदितमेवेदं विद्यावतां यत्तत्रभवता विद्यागणपतेरपरोऽवतार इति लब्धप्रतिष्ठाकेन गणपतिमुनिनार्षपद्धतिमनुरुध्य स्वीयजीवनयात्रां निर्व्यूढवतात्युग्रतपसा काव्यकण्ठेतिबिरुदभाजा कविकण्ठाभरणेन नानादेवतासमवेतानवधिककल्याणगुणगणवर्णनपराणि विविधच्छन्दोनिबद्धानि स्तोत्राणि तदा तदा प्राणायिषतेति। अतिरुचिरामृतरससहोदरं भक्तिरसं मृदुमञ्जुलपदपुञ्जचषकैः मुग्धभक्तभृङ्गान् पाययतां तेषां स्तोत्रकुसुमानां मालिकैषा काव्यकंठस्य श्रीवासिष्ठगणपतिमुनेरन्तेवासिप्रवरेषूत्तमश्लोकस्य दिवंगत श्रीदेवेंद्रशर्मणः गुरुप्रसादलब्धविश्वामित्रनामधेयस्य तनूजन्मभ्यां श्रीदिवस्पतिब्रह्मणस्पतिशर्मभ्यामद्यत्वे श्रीगुरुप्राभृतरूपेण प्राकाश्यं नीयते—इति महतः प्रमोदस्य स्थानम्।

एवमेवेतरेषां वासिष्ठकृतिरत्नानां प्रकाशनमर्हाधिकारिषु वितरणञ्च गुर्वनुग्रहशालिभ्यां वैदिकसहोदराभ्यामाभ्यां यथावसरं प्रवर्त्यतामिति निरुपधिकृपावति भगवति प्रार्थयामहे.

इति निवेदयिता

दत्तात्रेय शिवराम भट्टः





# इन्द्रो विश्वस्य राजति

—ऋग्वेद

भो भो भारतपुण्यभू–सुरवरा ब्रह्मर्षिवंशोद्भवा
नव्यो विश्वसुवो निधिर्मधुमयो धारासहस्रैः सरन् ।
व्यक्तः श्रीरमणस्य दिव्यतपसः सारो मनुष्याकृतिः
वासिष्ठो निजधर्मजीवनविधौ चिन्तामणिः सेव्यताम् ॥

—विश्वामित्रः

श्रीकाव्यकण्ठगणपतिमुनिकृत

## ॥ श्रीगणाधीश्वरादिगुरुपरम्परास्मरणम् ॥

सिद्धलक्ष्मीसमायुक्तं ब्रह्मविष्णुशिवात्मकम् ॥
महागणपतिं वन्दे सर्वविघ्ननिवारणम् ॥ १ ॥

ब्रह्म केऽपि यं वदन्ति वेदपारगामिनः
पुरुषं पुरातनं गदन्ति यं परे बुधाः ॥
मत्तवारणाननं समस्त लोककारणम्
चिन्तयामि सन्ततं तमन्तरायवारणम् ॥ २ ॥

यो बभाणाभणन्नेव मुनिभ्यो ब्रह्मनिर्द्वयम् ॥
दक्षिणामूर्तये तस्मै प्रज्ञानगुरवे नमः ॥ ३ ॥

स्थापितं ब्रह्मनिष्ठेन येनाद्वैतमतं भुवि ॥
तस्मै शङ्करसंज्ञाय विज्ञानगुरवे नमः ॥ ४ ॥

अंशावतारः स्कन्दस्य विश्वाचार्यो विदां वरः ॥
प्रणम्यते महाभागो रमणो भगवानृषिः ॥ ५ ॥

दक्षिणामूर्तिसारम्भां शङ्कराचार्यमध्यमाम् ॥
रमणाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ६ ॥

तिमिराणि न केवलं वचोभिः
करुणापाङ्गविलोकितैश्च नृणाम् ॥
हृदये प्रसरन्ति मर्दयन्तं
भगवन्तं रमणं गुरुं नमामि ॥ ७ ॥



# ॥ श्रीमंगलगौरीस्तोत्रम् ॥

१ जय गौरि जय गौरि जय पर्वततनये ॥
स्थिरहस्तस्थितविजये करुणामयहृदये ॥पल्ल॥

२ धृतसर्वग्रहगमनं शुद्धाजरपवनम् ॥
सति तव लीलाभवनं सर्वेश्वरि गगनम् ॥ जय ॥

३ मण्डलमर्कस्य घनं सिंहासनमवनम् ॥
नरततिलोचनमदनं तेजस्तव शयनम् ॥ जय ॥

४ तव शब्देन विभाता ब्रह्मद्युतिभीता ॥
असुरप्रमुखविनीता रिपुसेनाधूता ॥ जय ॥

५ दक्षिणहस्तो दाता वामस्तव नेता ॥
तव कार्ये स विधाता जगतामसि माता ॥ जय ॥

६ असि संविद्गतदोषा सर्वान्तरभूषा ॥
अनुपमतरुणीवेषा भवसीश्वरयोषा ॥ जय ॥

७ एकस्तव बलशाली सुत इन्द्रो जाली ॥
अपरस्सितकरमाली शुचिरितरः कीली ॥ जय ॥

८ चन्द्रार्कस्तनमुदिता शङ्करदयिता ललिता ॥
गणपतिमुनिसङ्गीता त्रिभुवनपावनमाता ॥ जय ॥



# ॥ श्रीकृष्णाक्षरमालिका ॥

कृष्ण जनार्दन कृष्ण जनार्दन कृष्ण जनार्दन कृष्ण हरे ॥कृ॥
अव्ययमाधव अन्तविवर्जित अब्धिसुताप्रियकान्त हरे ॥कृ॥
आशरनाशन आदिविवर्जित आत्मज्ञानद नाथ हरे ॥कृ॥
इन्द्रमुखामरबृन्दसमर्चितपादसरोरुहयुग्म हरे ॥कृ॥
ईश्वरसन्नुत ईतिभयापह राक्षसनाशनदक्ष हरे ॥कृ॥
उन्नतमानस उच्चपदप्रद उज्वलविग्रह देव हरे ॥कृ॥
ऊर्जोनाशितशात्रवसञ्चयजलधरगर्जितकण्ठ हरे ॥कृ॥
ऋषिजनसन्नुत दिव्यकथामृत भव्यगुणोज्वलचित्त हरे ॥कृ॥
ॠकारप्रिय ऋक्षगणेश्वरवन्दितपादपयोज हरे ॥कृ॥
ऌतकसमर्चित काङ्क्षितदायक कुक्षिगताखिललोक हरे ॥कृ॥
ॡवल्लोकाचारसमीरित रूपविवर्जितनित्य हरे ॥कृ॥
एकमनोमुनिमानसगोचर गोकुलबालकवेष हरे ॥कृ॥
ऐरावतकरसन्निभदोर्बल निर्जितदानवसैन्य हरे ॥कृ॥
ओङ्कारारम्बुज वनकलहंसक कलिमलनाशननाम हरे ॥कृ॥
औन्नत्याश्रयसंश्रितपालक पाकनिबर्हणसहज हरे ॥कृ॥
अङ्गदसेवित भङ्गविवर्जित सङ्गविवर्जित सेव्य हरे ॥कृ॥
अस्तगिरिस्थितभास्करलोहितचरणसरोजतलाढ्य हरे ॥कृ॥
कमलावल्लभ कमलविलोचन कमलविभाहरपाद हरे ॥कृ॥

खरमुखदानवसैनिकखण्डन खेचरकीर्तितकीर्ति हरे ।।कृ।।
गणपतिसेवित गुणगणसागर वरगतिनिर्जितनाग हरे ।।कृ।।
घटिकापर्वतवासि नृकेसरिवेष विनाशितदोष हरे ।।कृ।।
ङःप्रत्येकं न यथा वाक्ये नाथ तथा ते चित्ते क्रोधः ।।कृ।।
चपलाभासुर मेघनिभप्रभ कमलाभासुरवक्ष हरे ।।कृ।।
छलयुतदूर चलाचललोचन गोपवधूहृदयेश हरे ।।कृ।।
जगतीवल्लभरूप परात्पर सर्वजगज्जनपूज्य हरे ।।कृ।।
झङ्कारध्वनिकारिमधुव्रतमञ्जुलकेशकलाप हरे ।।कृ।।
ञाक्षरसंयुतजाधात्वर्थे परिनिष्ठितनैष्ठिकगम्य हरे ।।कृ।।
टङ्कारध्वनिकारिधनुर्धर शातशराहतदैत्य हरे ।।कृ।।
ठमिति मनुं वा समिति मनुं वा जपतां सिद्धिद नाथ हरे ।।कृ।।
डमरुकरेश्वरपूजित निर्जितरावणदानव राम हरे ।।कृ।।
ढक्कावाद्यप्रिय भयवारण विनयविवर्जितदूर हरे ।।कृ।।
णटधात्वर्थे पण्डितमण्डित सकलावयवोद्भासि हरे ।।कृ।।
तत्त्वमसीति व्याहृतिवाच्य प्राच्यधिनायकपूज्य हरे ।।कृ।।
थूत्कारानिलवेग नभोगत सप्तसमुद्रवराह हरे ।।कृ।।
दयितालिङ्गितवक्षोभासुर भूसुरपूजितपाद हरे ।।कृ।।
धरणीतनयाजीवितनायक वालिनिबर्हण राम हरे ।।कृ।।
नारायण माधव केशव गोपालक हे गोविन्द हरे ।।कृ।।
परमेशेश्वर पक्षिकुलेश्वरवाहन मोहनरूप हरे ।।कृ।।

फालविलोचन पङ्कजसम्भव कीर्तितसद्गुणजाल हरे ॥कृ॥
बलरिपुपूजित बलजितदानव बलदेवानुज बाल हरे ॥कृ॥
भवभयनाशन भक्तजनप्रिय भूभरनाशनकारि हरे ॥कृ॥
मायामोहितसकलजगज्जन मारीचासुरमथन हरे ॥कृ॥
यमुनातटेनीवरतटविहरण यक्षगणेश्वरवन्द्य हरे ॥कृ॥
राम रमेश्वर रावणमर्दन रतिललनाधवतात हरे ॥कृ॥
लक्ष्मणसेवित मङ्गललक्षणलक्षित शिक्षितदुष्ट हरे ॥कृ॥
वालिविनाशन वारिधिबन्धन वनचरसेवितपाद हरे ॥कृ॥
शङ्करकीर्तितनिजनामामृत शत्रुनिबर्हणबाण हरे ॥कृ॥
षड्गुणमण्डित षड्दोषापह दोषाचरकुलकाल हरे ॥कृ॥
सदय सदाशिवपूजितपादुक हृदयविराजितदयित हरे ॥कृ॥
हस्तचतुष्टयभासुरनन्दकशङ्खगदारथचरण हरे ॥कृ॥
ळबुळुबुनिस्वनमज्जित मन्दरपर्वतधारण कूर्म हरे ॥कृ॥
क्षयितनिशाट क्षान्तिगुणाढ्य क्षेत्रज्ञात्मक देव हरे ॥कृ॥
गणपतिपण्डितरचितं स्तोत्रं कृष्णस्येदं जयतु धरण्याम् ॥कृ॥
कृष्ण जनार्दन कृष्ण जनार्दन कृष्ण जनार्दन कृष्ण हरे ॥कृ॥



# ॥ श्रीतारकरामनामस्तुतिः ॥

दशरथनन्दन दशरथनन्दन दशरथनन्दन दाशरथे ॥दश॥
निर्गुण निष्कळ नित्यनिरञ्जन निर्गतमत्सरगम्य विभो ॥
संसारेऽस्मिन् निर्गतसारे पाहि विपारे दशवदनारे ॥दश॥
सर्वसमत्वं सर्वहितत्वं सत्सङ्गत्वं देहि विभो मे ॥दश॥
जननक्लेशं मरणक्लेशं नाशय गमनाऽगमनक्लेशम् ॥दश॥
को मे पुत्रः का मे जाया मायासेयं पाहि विभो माम् ॥
सनकसनन्दनसंस्तुतचरितं जानीते त्वां को गुणरयितम् ॥
नास्ति वपुस्ते नास्ति तवाख्या नास्ति च कर्म स्वस्तिद विष्णो ॥
मायाकल्पितमिदमखिलं ते रूपं कर्म च नाम च विविधम् ॥
नाम तु रामेत्यमलमिदं ते तारकमृषयः परिभाषन्त ॥दश॥
चतुरास्यस्त्वं चक्रधरस्त्वं परमेशस्त्वं परमात्मा त्वम् ॥दश॥
तत्त्वसमूहादुपरिलसन्तं पुरुषं साङ्ख्याः प्रवदन्ति त्वाम् ॥दश॥
दशशतपत्रे दशमुखशत्रो योगवितस्त्वामालोकन्ते ॥दश॥
जैमिनिमुख्याः कर्मफलं त्वां देव वदन्तो नन्दन्ति स्म ॥
वेदान्ते ये निष्ठितमतयस्ते प्राहुस्त्वामेकमभेदम् ॥दश॥
गजपतिकविना रचितं स्तोत्रं ललितं प्रीत्यै भवतो भूयात् ॥
दशरथनन्दन दशरथनन्दन दशरथनन्दन दाशरथे ॥दश॥

● ●

## ॥ अनुबन्धः ॥

देहि निजतेजः किङ्करजनाय ।
ईश्वर गणानां भारतहिताय ॥
सर्वद जनोऽयं वाञ्छति न मुक्तिम् ।
देशकुशलाय प्रार्थयति शक्तिम् ॥ॐ॥

—गणपतिगीतम्

जयतु भरतक्षोणी विश्वा विषादविवर्जिता
जयतु विबुधस्तस्याः क्षेमं विधातुमना जनः ॥
जयतु भरतश्रेयोमार्गे तपोवनसङ्कुलं
जयतु भुवि सा माता पूता सुसंस्कृतभारती ॥ॐ॥

—Adapted from 'उमासहस्रम्'

## बद्धजीवा आत्मनिष्ठया बुद्धदेवा भूत्वा पंचशीलान्विता राजन्ति भारते

जीवाः परात्मानमनन्यभक्त्या
हृदीश्वरं सम्परिशीलयन्तः ॥
सत्याद्यहिंसात्मकपञ्चशीला
दिवीव देवा भुवि भारतीयाः ॥१॥

÷ अहिंसा सत्यवचन—मानृशंस्यं दमो दया । एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ —मनुसंहिता

सौजन्यसम्राट्पदभाग्यवन्तः
कल्याणसाम्राज्यधुरं वहन्तः ॥
शान्ता स्वयं, शान्तिविधानसत्त्वा
दिवीव देवा भुवि भारतीयाः ॥२॥

※ वेदोदितोत्कर्षपदेऽरमन्तो
दिवौकसां बोधविधौ लसन्तः ॥
द्रव्यादितत्त्वार्थधियः कृतार्था
दिवीव देवा भुवि भारतीयाः ॥३॥

योगे सदात्मार्पितशुद्धचित्ता
ब्रह्मैक्यभावोपनिषत्प्रतिष्ठाः ॥
विज्ञानकौशल्यकलाविदग्धा
दिवीव देवा भुवि भारतीयाः ॥४॥

भावादहिंसान्तरसत्यशीला
बुद्धाः प्रबोधेन निजस्वरूपे ॥
अर्हन्त ईड्यैः स्वगुणप्रकाशैः
दिवीव देवा भुवि भारतीयाः ॥५॥

---

※ (वेदोदित-उपासनशीलाः षोडशसंस्कारादिकर्मपरा याज्ञिकाः)

सर्वज्ञता नित्यसुतृप्तता च अनादिबोधश्च स्वतन्त्रता च ।
अलुप्तशक्तित्वमनन्तता च षडाहुरङ्गानि बुधाः शिवायाः ॥

—श्रीविद्यार्णव

ब्रह्मर्षि–देवर्षि–महर्षिवृन्दा
देवांशसम्भूतविभूतिसत्त्वाः
नन्दन्ति पुण्ये वरभारतेऽस्मिन्
दिवीव देवा भुवि भारतीयाः ॥६॥

माता भारतभूदेवी पिताचिन्मयपूरुषः ।।
बान्धवा भारतीयाश्च स्वदेशो भुवनत्रयम् ॥७॥

## ।। प्रणवोद्गीथविद्यया भारतीययुवजन आराधनम् ।।

प्रकृतिपुरुषरूपः प्राणिजीवस्वरूपः
रविशशिदहनाभो मूलकुण्डाग्निशोभः ॥
प्रणवनिनदविद्याहृद्यमाधुर्यभावो
जयतु भरतदिव्यो नव्यतारुण्यजीवः ॥❋॥

—डि. एस्. विश्वामित्र